HITAYA

Samskrit Refereed Quarterly E Journal

Abhijñāna | Anubhūti | ānanda

ISSN : 2581-7787

अष्टादशाङ्कः । अष्टाम्बरमासतः दशाम्बरमासपर्यन्तं २०२३।

# अनुबन्धचतुष्टयम्

∆भीमानन्दः बि एच्
शोधच्छात्र:
कर्नाटकसंस्कृतविश्वविद्यालय:
चामराजपेटे, बेङ्गलूरु – 560018
8722970479

ततः पुनः मुण्डकोपनिषदि क्षीणदोषाः यतयः एव ब्रह्मज्ञानस्य अधिकारिणः भवन्ति इति उच्यते । आवरणदोषः विक्षेपदोषः मलदोषः च इति कृत्वा शास्त्रकृद्भिः अद्वैतवेदान्तस्य प्रकरणग्रन्थेषु उच्यते । एतद्दोषत्रयात् रहितः एव क्षीणदोषः भवति । आवरणदोषो नाम अज्ञानम् एव भवति । तच्च अज्ञानं स्वरूपभूतम् आत्मानम् आवृत्य तिष्टति एवं आत्मनः विपरीतम् अन्यदेव दर्शयति इति कृत्वा तस्य नाम आवरणमिति । आत्मातिरिक्तं किमपि नैव भवति चेत् अपि विक्षेपदोषः तृणादारभ्य ब्रह्माण्डान्तं जगत् कल्पयति । अयमेव दोषः जगत्कारणम् अज्ञानस्य शक्त्योः अन्यतमा भवति । मलदोषः नाम पापदोषः भवति । धर्मशास्त्रज्ञानात् बाह्यः सर्वान् जीविनः आत्मवत्

अविज्ञाय एव परोपकारादिरहितः पापान् आचरति । तेन पापाचरणेन संमोहितबुद्धिः भूत्वा अविवेकी सन् हीनयोनिषु जन्म प्राप्य अनन्तदुःखम् अनुभवति । तदर्थमेव अत्र उपनिषदि अधिकारी क्षीणदोषः भवेत् इति उपदिश्यते । तद्यथा –

यं पश्यन्ति यतयः क्षीणदोषाः । इति ।

पुनः मैत्रायिण्योपनिषदि उच्यते यत् ज्ञानस्य अधिकारी प्रसन्नचित्तः कर्मविर्जितः च भवेत् इति । चित्तस्य चाञ्चल्यं बहु अस्ति चेत् तादृशायां बुद्धौ ब्रह्मज्ञानं नैव फलति इति कृत्वा अत्र उपनिषदि चित्तस्य प्रसादः भवतु इति उक्तं वर्तते । ब्रह्मज्ञानप्रदातुः गुरोः प्राप्तेः पूर्वमेव कर्माचरणं कर्तव्यं न तु गुरु सन्निधौ । यतो हि कर्मणां गतिः भिन्ना ज्ञानस्य च गतिः अपि अन्या । "दूरमेते विपरीते विषूची" इत्यादिना अपि तदर्थमेव उपनिषत्सु भाष्ये च पुनः पुनः उक्तं वर्तते । श्रीमच्छङ्करभगवत्पाः तु ज्ञानकर्मसमुच्चयवादं नितरां खण्डयन्ति एव । पुण्यं कर्म शुभकर्म भवति । पापं कर्म अशुभं कर्म भवति । एतौ उभे अपि कर्मणी पुन्यपापद्वारा आत्मानं बध्वा जन्म दापयन्ति इति कृत्वा हातव्यौ एव भवतः इति वेदान्तेषु उच्यते । मैत्रायिन्यां यथा –

चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ।
प्रसन्नात्माऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥ इति ।

श्रीमच्छङ्कराचार्याः आत्मज्ञानस्य अधिकारिणः लक्षणमेवं वदन्ति यथा –

मेधावी पुरुषो विद्वान् ऊहापोहविचक्षणः ।
अधिकार्यात्मविद्यायामुक्तलक्षणलक्षितः ॥ इति
विवेकिनो विरक्तस्य शमादिगुणशालिनः ।
मुमुक्षोरेव हि ब्रह्मजिज्ञासायोग्यता मता ॥ इति च ।

अनधिकारिणः निन्दा ।

ब्रह्मज्ञानस्याधिकारिणः यथा प्रशंसा कृता तथा अनधिकारिणः निन्दा अपि शास्त्रेषु क्रियते ।

विवेकचूडामणिः इति ग्रन्थे शङ्कराचार्यैरुक्तं यत् – अदृढवैराग्येन यः मुमुक्षुः महत् भवाब्धिं तर्तुमिच्छति सः आशारूपेण मकरेण दृढतया कण्ठे गृहीतः समुद्रान्तराले नीयते इति । तद्यथा –

आपातवैराग्यमतो मुमुक्षून्
भवाब्धिपारं प्रतियातुमुद्यतान् ।
आशाग्रहो मज्जयतेऽन्तराले
निगृह्य कण्ठे विनिवर्त्य वेगात् ॥ इति ।

श्रीमद्भगवद्गीतायां पथभ्रष्टस्य साधकस्य विषये उच्यते यत् –

कश्चिन्नोभय विभ्रष्टश्चिन्नाभ्रमिव नश्यति ।

अप्रतिष्टो महाबाहो विमूढो ब्रह्मणः पथि ॥ इति ।
उपदेशसाहस्र्यां शङ्करार्येण अनधिकार्यत्वस्य विषये उच्यते यत् –
सदभ्युपेतं भवतोपकल्पितं
विचारहेतोर्यदि तस्य नास्तिता ।
विचारहानाच्च तथैव संस्थितं
न चेत्तदिष्टं नितरां सदिष्यते ॥ इति ।
२) विषयः ।
विषयो जीवब्रह्मैक्यं शुद्धं चैतन्यं प्रमेयम् । तत्रैव वेदान्तानां तात्पर्यात् । इति श्री सदानन्दयतिवरेण्याः स्वस्मिन् वेदान्तसारः इति ग्रन्थे वदन्ति । चैतन्यं नाम सर्वविधपरिच्छेदराहित्यतया उपादिरहितं शुद्धबुद्धमुक्तस्वभावं सच्चिदानन्दनित्यपरिपूर्णं वेदान्तवेद्यमेव ब्रह्म भवति । शुद्धम् इति पदेन भेदान् व्यावर्तयति । यद्यपि यतो वाचो निवर्तन्ते इत्यादिभिः श्रुतिभिः ब्रह्मणः बोध्यत्वं नैव भवति इति चेदपि दृश्यते त्वग्रया बुद्दधया इत्यादिभिः श्रुतिभिः शास्त्रसंस्कारितबुद्धौ ब्रह्म प्रतिफलति इति दर्शयन्ति । ब्रह्मणि एव बलाड्यानां सर्वासामपि उपनिषदां तात्पर्यं वर्तते इति कारणेन अनुबन्धेषु विषयत्वेन ब्रह्म एव निर्दिश्यते ।

- सम्बन्धः ।

सम्बन्धः तु मुख्यतया बोध्यबोधकभावरूपः भवति । बोध्यबोधकः सम्बन्धस्तु प्रमेयस्य ब्रह्मणः उपनिषत् प्रमाणस्य च भवति । बोध्यं ब्रह्म बोधकं च शास्त्रम् इति कृत्वा बोध्यब्धकभावरूपः सम्बन्धः । एवम् आचार्यस्य अध्येतुः च गुरुशिष्यसम्बन्धः भवति । एवं मुक्तिः प्राप्या प्रापकः च आचार्यः इति तयोः प्राप्तिप्रापकभावः सम्बन्धः भवति । एवमत्र अनेके गौणसम्बन्धाः भवितुम् अर्हन्ति । ये च अधिकारिणा ज्ञातव्याः भवन्ति । तदुक्तं वेदान्तसारग्रन्थे यथा सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावः इति । अत्र ब्रह्म एव प्रमेयं अज्ञानं ब्रह्मगतं भवति इति कृत्वा तस्य अज्ञानस्य निवृत्तिः एव वेदान्तानां तात्पर्यं भवति ।

- प्रयोजनम् ।

प्रयोजनं सम्प्रवृत्तेः कारणं फललक्षणम् । प्रयोजनमनुद्धिश्य मन्दोऽपि न प्रवर्तते ॥ इत्यादितया उक्तरीत्या विना प्रयोजनम् उन्मत्तः अपि अनियन्त्रितबुद्धिः कुत्रापि नैव प्रवर्तते इति जगति सर्वत्र दृश्यते एव । एतादृशस्थितौ अस्य महातत्वज्ञानशास्त्रस्य वेदान्तविद्यायाः प्रयजनं नैव उच्यते चेत् तत्र को वा मुमुक्षुः प्रवृत्तः स्यात्? । तदर्थमेव प्रयोजनं विद्यायाः आरम्भे ग्रन्थानां च आरम्भे च अवश्यम् उच्यत एव ।

अद्वैतवेदान्तशास्त्रस्य प्रयोजनं तु अत्यन्तदुःखनिवृत्यात्मकः परमान्दप्राप्त्यात्मकः च भवति। अत्यन्तदुःखनिवृत्तिः तु अज्ञाननिवृत्तिद्वारा एव भवति। यतो हि अज्ञानमेव समस्तस्य दुःखस्य मूलं कारणं भवति। कारणस्य निवृत्तौ कार्यस्यापि नाशः इति सार्वत्रिका व्याप्तिः। अज्ञानस्य निवृत्यां सत्यां परमानन्दरूपस्य ब्रह्मणः स्वतः एव अपरोक्षानुभवः भवति। न च पुनरावर्तते। न तस्य प्राणाः हयुत्रामन्ते हयत्रेव विलीयन्ते। इत्यदयः श्रुतयः ब्रह्मज्ञानिनः संसारदुःखनिवृत्तिं परमानन्दप्राप्तिं च प्रयोजनत्वेन दर्शयन्ति। वेदान्तसारग्रन्थे च प्रयोजनं तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः स्वस्वरूपानन्दावाप्तिश्च तरति शोकमात्मवित् इत्यादिश्रुतेः ब्रह्मवित् ब्रह्मैव भवति इत्यादिश्रुतिभ्यः च इति उच्यते। चिन्मात्राज्ञाननिवृत्तिः प्रयोजनमिति प्रतिपत्तव्यम्।



<u>महाभाष्ये परमलघुमञ्जूषायां च स्फोटविमर्शः</u>

∆पल्लवकुमारदासः ,MOBILE- 8509671101,
EMAIL-pallabdas712404@gmail.com
(शोधच्छात्रः,केन्द्रीयसंस्कृतविश्वविद्यालयः)

वैखरीनादः प्रयुक्तः , स केनचिच्छोत्रेन्द्रियेण गृहीतः , सः नादः इन्द्रियद्वाराबुद्धिहृद्गतः सन्नर्थबोधकं शब्दं स्वनिष्ठकत्वादिना व्यञ्जयति ,तस्मादर्थबोधः।" २ इति।

उच्चारणकाले मध्यमा-वैखरीवाचा नादोत्पन्नः भवति। वैखरीनादः उत्तेजकः । उत्तेजकस्य वैखरीनादस्य प्रयत्नेन उत्तेजितेन मध्यमानादेन अर्थबोधकस्य स्फोटस्य अभिव्यक्तिर्भवति। मध्यमानादः उत्साहकः उत्तेजकः वा। मध्यमानादः स्फोटस्य व्यञ्जकः तथा मध्यमानादात् अर्थबोधः भवति। अनेकव्यक्तभिव्यङ्गा जातिः स्फोटः। यथा अनेकध्वनिरूपशब्देन अभिव्यक्त एक अखण्डः नित्यः स्फोटरूपः शब्द एव जातिः। पूर्वोक्ताः अष्टप्रकारस्फोटाः औपाधिकाः स्फटिके लौहित्यादिवदेव। वास्तविकः स्फोटः वाक्यस्फोटः वाक्यजातिस्फोटः वा य एक अखण्डश्च इति परमलघुमञ्जूषायां नागेशमतं स्फोटविषये ।

❑ ❑ ❑ विविधानां पदानां अर्थबोधने स्फोट एव कारणम्। स्फोटेन विना कोऽपि शब्द अर्थबोधको न भवितुं शक्नोति। महाभाष्यकारेण उक्तं – स्फोटः शब्दः ध्वनिस्तस्य व्यायामादुपजायते इति ।विदुषां शब्दशास्त्रपारङ्गतानां मते शब्दानां नित्यतायाः मूले स्फोट एव कारणम्। वस्तुतः नित्यः शब्द एव स्फोटरूपेण कथ्यते। स्फोटविषये दार्शनिकानां वैयाकरणानां च मध्ये मतविरोधः दृश्यते। तत्र अतिविस्तृतालोचना वर्तते। वैयाकरणसम्प्रदाये नागेशः,भर्तृहरिः,भगवान् पतञ्जलिः तथा भट्टोजिदीक्षितः तस्य शब्दकौस्तुभे स्फोटस्य आलोचनां कृतवान्। महाभाष्यकारेण अष्टाध्याय्याः प्रथमाध्यायस्य प्रथमपादस्य सप्ततितमस्य सूत्रस्योपरि स्वकृते भाष्ये एका कारिका लिखिता –

"ध्वनिः स्फोटस्य शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषांश्चिदुभयं तत् स्वभावतः"।।

अर्थात् शब्दस्य द्वे रूपे स्तः ध्वनिः स्फोटश्च । विविधव्याकरणग्रन्थानामनुशीलनेन स्पष्टं भवति यत् स्फोटस्तु द्विविधः – आन्तरः बाह्यश्च । श्रवणेन्द्रियप्रत्यक्षविषयः वैखरीरूपशब्द आन्तरः। अर्थस्य वास्तविकः वाचकस्तु बाह्यस्फोटः। स्फोटेन विना उच्चार्यमानेषु शब्देषु अर्थबोधिका शक्तिः न तिष्ठति, एतदभावे वर्णोच्चारणप्रक्रिया एव निरर्थका

सिद्ध्यति। द्वितीयवर्णस्योच्चारणकाले प्रथमवर्णस्य विनाशः भवति, तर्हि कथंकारं उभयोः वर्णयोः सम्बन्धः भवेत्। यदि ईदृशः सम्बन्धः न भवेत् तदा अर्थबोधोऽपि न सम्भाव्यः।

एवमेव पदगतानामन्येषां वर्णानां मध्ये स्फोट एव सम्बन्धाधायकः। स एव अर्थबोधिकाशक्तिरूपेण कार्यं करोति। स्फोटेन विना अर्थबोधः न भवितुं शक्नोति। कः शब्दः? शब्दस्य अर्थज्ञानं कथं भवति? इत्यादयः प्रश्नालोचनावसरे स्फोटस्य आलोचनां कृतवन्तः वैयाकरणाः। प्रस्तुतमाने शोधप्रबन्धे भगवतः पतञ्जलिमुनिविरचितात् महाभाष्यात् तथा नागेशविरचितायाः परमलघुमञ्जूषायाः स्फोटस्वरूपविमर्शः यथामति मया कृत इति शम्।

सन्दर्भग्रन्थसूची


१) परमलघुमञ्जूषा, प्रो. बोधकुमारः झा, हंसा प्रकाशन, जयपुर, २०१८

२) परमलघुमञ्जूषा, आचार्य लोकमणि दाहाल, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०१८

३) व्याकरण-महाभाष्यम्, प्रो. जयशङ्करलाल त्रिपाठी, चौखम्बा कृष्णदास अकादमी, वाराणसी, २०२१

४) परमलघुमञ्जूषा, गोस्वामी विजया ,संस्कृत पुस्तक भाम्डार, कोलकाता, २००६

५)व्याकरण-महाभाष्य , मेधाचैतन्य ब्रह्मचारी, संस्कृत वुक् डिपो, कोलकाता, २०१७

६) परमलघुमञ्जूषा, श्री सदाशिवशास्रि पण्डित, चौखम्बा संस्कृत सीरिज आफिस , वनारस सिटी,२००३

७) परमलघुमञ्जूषा, नित्यानन्दपन्त पर्वतीय, दि चौखम्बा संस्कृत वुक् डिपो, वनारस सिटी,१९१७

८) व्याकरण महाभाष्य, चारुदेव शास्त्री, मोतीलाल बनारसीदास, दिल्ली,२०१७

९) व्याकरणदर्शनेर् इतिहास, गुरुपद हालदार, संस्कृत वुक् डिपो, कोलकाता, २००६

१०)व्याकरणमहाभाष्यम्, महामहोपाध्याय-पण्डित-शिवदत्त शर्मा ,चौखम्वा संस्कृत प्रतिष्ठान,दिल्ली, १९८८

११) पाणिनीयव्याकरणमहाभाष्यम्, शास्त्री भार्गव, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, १९८७




# प्रशासनक्षमाः किल क्षत्रियाः

∆Dr. Shambhunath Bhat
Assistant professor
Dept of Samskrit and Vedic studies
Sri Satya Sai University for Human Excellence, Kalaburgi,
Muddenahalli Campus, Chikkaballapur, Karnataka 562101
shambhubakkal@gmail.com Ph- 9482493321

प्रबन्धसारः –
इह लोके मनुष्याः स्वभावेन भिन्नाः अपि समभावेन जीवनं यापयन्ति । जीवनस्य उत्कर्षः केन प्रकारेण स्यादित्येव शास्त्रस्य विचारः । अतः परमशास्त्रभूतः वेदः वर्णाश्रमधर्मः विदधाति । तत्र एकैकस्य स्वभावानुरोधेन तदुचितं कर्म प्रशस्यते । समाजस्य सुपरिपालनार्थं समेषामपि महद्योगदानं वर्तेतेतराम् । सामाजिक-जीवने सम्पदाद्यर्जनं यथा प्रधानं स्थानमावहति तथैव तद्रक्षणमपि । अतः बहूनां ब्रह्मचारिगृहस्थादि-आश्रमिणां सम्यक् परिपालनं समाजस्वास्थ्यदृष्ट्या नितरामपेक्षितम् ।
प्रबन्धेऽस्मिन् संरक्षकप्रधानस्य क्षत्रियस्य स्वभावविषये विचारः प्रस्तुतः । विशेषेण क्षत्रियशब्दार्थः कः ? तत्र अपेक्षितानां गुणानां प्रस्तुतिपूर्वकं विचारः कृतः । गीता-सुभाषितादिष्वपि एते विचाराः कृताः । ते विचाराः एकीकृत्य प्रस्तोतव्याः । तत्र च उक्ताः विषयाः सम्यक् परिशीलनीयाः इति धिया एव अयमुपक्रमः । विस्तरभयात् केचनविचाराः एव इह प्रस्तुताः । प्रत्येकं व्यक्तेः स्वभावस्य, कर्तव्यस्य च परिज्ञाने एव तत्तत्कर्मणि सम्यक् प्रवर्तितुमर्हन्ति । अधुनातने समाजेऽपि समानतायाः नाम्नि बहुधा अज्ञानं वरीवर्ति । तदपाकरणपुरस्सरं समाजजागृतिः एव प्रधानं लक्ष्यमस्य ।
प्रधानपदानि –
क्षत्रियः, स्वभावः, वर्णधर्माः, राजा, राजधर्मः, प्रशासनम्, पालकः,

भूमिका –
जगति यत्किञ्चित् कार्यं भवतु तस्य एकः मुखरः अपेक्षितः । कार्यम् उत्तमं दुष्टं वा स्यात् । यशः प्राप्नोतु न वा प्राप्नोतु । समानमनस्काः एकत्रिताः भवेयुः । तेषां मनसि नायकेन स्व-चिन्तनम् अङ्गीकारार्हं कर्तव्यम् । एतत्सर्वं कर्तुम् एकः आयोजकः अपेक्षितः । स्वोद्दिष्टदिशि जनाः प्रेरणीयाः । यथा यथा कार्यं वर्धते तथा तथा अधिकाः जनाः तन्निर्वोढुम् अपेक्षिताः । ते सर्वे स्थिरं तेन समं कार्यं कुर्युः । एवं कर्तुं समर्थः यः स एव नायकः शासको वा भवति ।
क्षत्रियः

अस्मिन् संयोजके क्षात्रगुणः प्रधानः भवति। समाजे कृतायां वर्णव्यवस्थायां क्षत्रिये वर्णे तस्य अन्तर्भावः। समान्यतः अयं बहुप्रधानः इति उच्यते। बहुप्रधानः इत्यस्य शरीरेण समर्थः बलिष्ठः इत्यर्थः भवति। मानवीये शरीरे बलस्य द्योतकः बाहुः एव। अत एव बाहुप्रधानः इति कथनम् क्षत्रियाणाम्। सामान्यतः गुणेन कर्मणा च व्यक्तेः वर्णः ज्ञातुं शक्यः। तदुक्तम् –

चातुर्वर्ण्यं मया स्रष्टं गुण कर्म विभागशः।
तस्य कर्तारमपि मां विध्यकर्तारमव्ययम्॥

गुणाः सत्वादयः, तेषां प्राधान्याप्राधान्यभावेन कस्मिन् वर्णे अयमन्तर्भाव्यः इति निर्णेतुं शक्यते। गीताभाष्ये शङ्कराचार्यैः विषयः अयं निरूपितः – "गुणाः सत्त्वरजस्तमांसि। तत्र सात्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य 'शमो दमस्तपः' इत्यादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि, तम-उपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रज-उपसर्जनतमःप्रधानस्य शूद्रस्य शूश्रूषैव कर्म इत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मया सृष्टम्।"

क्षत्रिये आधारः सत्त्वगुणस्य, तदुपरि रजोगुणः प्रधानः भवति। अत एव भाष्ये सत्त्वोपसर्जनरजःप्रधानः इत्युक्तम्। सत्त्वस्य अधिष्ठानत्वं यदि न भवति तर्हि राज्ञि जनानां सेवापेक्षया जनाः स्वसेवां कुर्युः इति भावः भवति। सत्त्वाधिष्ठानम् इत्यस्य सत्त्वप्रधानः (ज्ञानी-ब्राह्मस्वभाववान्) यः अस्ति तस्य आधारेण (मार्गदर्शनानुसारम्) राज्ञा स्वकर्तव्यम् अनुष्ठेयम् इत्यर्थः। राजा सर्वदापि ब्राह्मगुणस्य अधीने भवेदित्यर्थः। रजः प्रधानत्वादेव आक्रामकस्वभावयुक्ताः (aggressive) भवन्ति। अल्पेन तृप्ताः न भवन्ति। रजोगुणः सर्वदा चलनात्मकः अतः क्षात्रगुणयुक्ताः चलनात्मकाः अर्थात् सक्रियाः भवन्ति। कर्माणि अपि गुणस्य आधारेण एव निर्णेतुं शक्यानि –

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्॥

एतानि सप्त कर्माणि क्षत्रियैः सामान्यतः क्रियन्ते। भाष्यवचनं पश्यामः चेत् विचारोऽयं स्पष्टः भवति – "शौर्यं शूरस्य भावः, तेजः प्रागल्भ्यम्, धृतिः धारणम् (सर्वावस्थासु अनवसादः भवति यया धृत्या उत्तम्भितस्य), दाक्ष्यं दक्षस्य भावः, सहसा प्रत्युत्पन्नेषु कार्येषु अव्यामोहेन प्रवृत्तिः, युद्धे चापि अपलायनम् अपराङ्मुखीभावः शत्रुभ्यः, दानं देयद्रव्येषु मुक्तहस्तता, ईश्वरभावश्च ईश्वरस्य भावः प्रभुशक्तिप्रकटीकरणम् ईशितव्यान् प्रति क्षात्रं कर्म क्षत्रियजातेः विहितं कर्म क्षात्रं कर्म स्वभावजम्।

एतेषां कर्मणाम् आधारेण तस्य व्यक्तेः स्वभावः ज्ञातुं शक्यः । एतेषां गुणानां प्राधान्याप्राधन्यज्ञानेन, कर्मणां च आचरणस्वरूपेण अयं क्षत्रिये वर्णे अन्तर्भवति उत अन्यस्मिन् इति निर्णेतुं शक्यम् ।

सामान्यतः गुणाः कर्माणि च जनेन स्वेन अर्जनीयं वर्धनीयं च भवति । जन्म अपि अत्र कारणम् इति कथयितुं शक्यम् । जन्म एव कारणं न । प्रतिमानवं परम्परानुसारं गुणः स्वभावः च अनुवर्तते । DNA(Deoxyribonucleic acids) द्वारा केचन स्वभावजाः गुणाः परम्परानुसारं (hereditary) अनुवर्तन्ते इति उच्यते । अतः जन्म अपि गुणानां कर्मणां च आश्रयणे साहाय्यं करोति । क्षत्रियगुणयुक्ते वंशे क्षात्रस्वभाववानेव जनिं प्राप्नोति । अत एव वंशानुसारं शासनक्रमः राजतन्त्रे आश्रितः स्यात् । एवमेव भवेदिति नास्ति नियमः । एषः सार्वत्रिकः नियमः भवितुं नार्हति। अर्थात् जन्म एव वर्णनिर्णायकं भवति इत्यपि कथनं स्वीकारार्हं न । कदाचित् क्षत्रियवंशे अन्यवर्णस्वभाववानपि उत्पद्येत । कदाचित् ब्राह्मण-वैश्य-शूद्रादिष्वपि क्षात्रगुणस्वभाववान् उत्पद्येत । एतेषां बहूनि उदाहरणानि अपि भारतीयेतिहासे प्राप्यन्ते । कथञ्चित् जन्म कुत्रापि भवतु गुणः स्वभावः च क्षात्रवर्णयोग्यः अस्ति चेत् सः क्षत्रियः इत्यर्थः ।

एवं क्षात्रगुणयुक्ताः केवलं नायकाः भवितुमर्हन्ति । नेतृत्वं समर्थतया निर्वहति चेत् सः क्षत्रियः इत्यर्थः । क्षात्रगुणयुक्तः यत्र कुत्रापि भवतु सः राजते एव । संस्थायाः सङ्घटनस्य देशस्य वा प्रमुखः भवेदिति नास्ति । अयं गुणः भवति चेत् पुनः तस्य चयनं कर्तव्यं नास्ति । सः स्वयं तत्स्थानम् अर्जयति । प्राणिष्वपि अयं विशेषः भवतीति सुभाषितकारेण उच्यते –

नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥

सिंहः यथा स्वयं मृगेन्द्रः भवति तद्वत् क्षात्रस्वभाववान् यः भवति चयनाभावेऽपि सः नेता भवति एव ।

क्षत्रियस्य कर्तव्यम्

क्षात्रगुणयुक्तः क्षत्रियः इति सत्यमेव, किन्तु तस्य प्रधानं कर्तव्यं किम् इति कालिदासः इत्थं वदति –

क्षतात् किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः ।
राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥

पीडितानां पीडानिवारणमेव क्षत्रियस्य प्रधानं कर्म । आर्तानाम् आर्तिनाशं यः करोति सः क्षत्रियः । यः एतस्माद्विपरीतः सः शस्त्रपाणिरपि क्षत्रियः न भवति । क्षतात् त्रायते इति क्षत्रियः इत्येव व्युत्पत्तिः । क्षि-क्षयैश्वर्ययोः, क्षि-हिंसायाम् इति च धातुभ्यां क्षत्रियशब्दः प्राप्यते । यास्कः पाणिनिः च क्षि-क्षयैश्वर्ययोः

इत्यस्मादेव क्षात्रशब्दस्य प्राप्तिं दर्शितवन्तः । "क्षतात् त्रायते इति क्षत्रियः" इति यास्कः वदति । धातोः एकः अर्थः क्षयः इत्यस्ति । इह क्षयः इत्यस्य नाशः इति नार्थः, आश्रयः, निवासः इति वा अर्थः – "तुरङ्गगरुडौ तार्क्ष्यौ निलयापचयौ क्षयौ" इति अमरे निलयार्थे क्षयशब्दः प्रयुक्तः । एवं च क्षत्रियः आश्रयप्रदाता भवेत् । द्वितीयः अर्थः अस्ति ऐश्वर्यम् इति । सर्वेभ्यः आश्रयं दत्त्वा सम्पदं यः वर्धयति सः क्षत्रियः । देशः आन्तरिकैः बह्यैः च शत्रुभिः यदा रक्ष्यते तदा सम्पत् वर्धते । यदा च सम्पत् वर्धते तदा देशस्य रक्षणं भवति । एवम् एतौ उभौ अपि परस्पराश्रितौ । यत्र आश्रयः भवति रक्षणं वा भवति तत्र सम्पद्वर्धते, यत्र सम्पत् भवति तत्र रक्षणं सुकरं भवति । एवं क्षि-क्षयैश्वर्ययोः इति धातोः सकाशात् क्षत्रियः इति रूपस्य प्राप्तिः ।

अपरः धातुः अस्ति क्षि-हिंसायाम् इति । यः परान् शत्रून् दुष्टान् वा तापयति हिंसयति सः परन्तपः क्षत्रियः । दुष्टानां दमनं करोति इत्यतः हिंसार्थकः क्षि-धातुः अपि क्षत्रियशब्देन अन्वेति । अपि च मन्वादिभिः स्मृतिकारैः उपनाम्नां कथनावसरे क्षत्रियेभ्यः "वर्मा" इति कथितम् । वर्मा इत्यस्य कवचः इत्यर्थः –

शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वंश दंशनम् ।
उरश्छदः कङ्कटको जागरः कवचोऽस्रियाम् ॥

यच्च रक्षति तत् वर्म । अर्थात् कवचात्मकं रक्षकम् इत्यर्थं । एवं क्षत्रार्थः रक्षणार्थः च वर्मन् शब्देन प्राप्यते ।

क्षात्रस्वभावः वैदिकवाञ्मये सर्वत्र दृश्यते । यदा समाजे अव्यवस्था भवति क्षात्रांशः तदा उदेति । व्यवस्था भवति इत्युक्तौ तत्र क्षात्रभावः अस्ति इत्यर्थः । देश-काल-नियमाः यदा आविर्भूताः तदा एव क्षात्रः अविर्भूतः । एवं च प्रकृतिसहजः अस्ति क्षात्रगुणः । यथाकालं सः आविर्भवति । देहे अपि श्वेतरक्तकणाः(white blood cells) देहस्य रक्षणमेव कुर्वन्ति । anti bodies यदा देहं प्रविशन्ति तान् निवार्य देहं रक्षन्ति श्वेतरक्तकणाः । एवं देहेऽपि क्षात्रस्वभावः श्वेतरक्तकणः । एषः क्षात्रः सत्त्वाधिष्ठितः भवेत् । अर्थात् ब्राह्मप्रभावितः भवेत् । तदा केवलम् आर्तानां पीडितानां रक्षणं भवति । मानवानां केवलं रक्षणं न, अपि तु सौम्यस्वभावयुक्ताः प्राणिनः अपि रक्षणीयाः –

तत्साधु कृतसन्धानं प्रतिसंहर सायकम् ।
आर्तत्राणाय वः शस्त्रं न प्रहर्तुमनागसि ॥

केवलं रजःप्रधानः भवति चेत् पीडकाः अपि रक्षिताः स्युः । एवं सत्त्वाधिष्ठितः क्षात्रः व्यवस्थापकः, क्षतात् आर्तानाम् आर्तिनाशकः भवति ।

अमरे क्षत्रियपर्यायवाचकाः शब्दाः निर्दिष्टाः –“मूर्धाभिषिक्तो राजन्यः बाहुजः क्षत्रियो विराट्”। राज्यप्रदानकाले मूर्धनि अभिषिच्यते इत्यतः मूर्धाभिषिक्तः । राज्ञः अपत्यं राजन्यः। बाहुभ्यां जातः बाहुजः अर्थात् बाहुप्रधानः । क्षदति क्षतात् त्रायते वा इति क्षत्रियः । क्षद-संवरणे इति धातोः “क्षदति” शब्दस्य निष्पत्तिः । क्षदति इत्यस्य आवृणोति इत्यर्थः । विशेषेण राजते इति विराट् । एवं क्षत्रियपर्यायवाचकाः शब्दाः ।

वेदे गोपाः, पशुपः, शर्धा, व्रातः इत्येवं क्षत्रियपर्यायवाचकाः शब्दाः प्राप्यन्ते । गुप्-रक्षणे इति धातोः गोपा इत्यस्य प्राप्तिः । तथैव गो-शब्दस्य भूमिरित्यपि अर्थः अस्ति । अतः पृथिव्याः पालकः इत्यर्थः प्राप्यते । एवं सर्वत्रापि क्षत्रियः रक्षकत्वेन प्रसिद्धः अतः क्षत्रियस्य कार्यं रक्षणम् ।

क्षत्रियेण क्षात्रगुणस्य स्वजीवने पालनार्थं श्रौताः यागाः अनुष्ठेयाः भवन्ति । यागानाम् अनुष्ठानेन परिसरशुद्धिः मनःशुद्धिश्च भवति । सत्त्वस्याधिष्ठानत्वं सिध्येत् इत्युक्तौ यागाः अनुष्ठेयाः । तत्रापि विशेषेण क्षत्रियेभ्यः विहिताः यागाः सन्ति । राजसूयः, वाजपेयः, सौत्रामणिः, अश्वमेधः इति प्राधान्येन चत्वारः यागाः । नूतनस्य राज्ञः आविर्भावं सूचयति राजसूयः । वाजपेयः सैन्यस्य सङ्घटनार्थं राज्यस्य पुनःसम्पादनार्थं च वर्तते । मैत्र्याः संवर्धने सौत्रामणिः । साम्राज्यस्य विस्तरणार्थम् अश्वमेधः । इत्येवं क्षत्रियैः अनुष्ठेयाः यागाः वर्तन्ते ।

उपसंहारः –

क्षत्रियाः इत्युक्तौ सामान्यानां मनस्सु युद्धायुधादीनां दृश्यमेव दृष्टिपथमायाति । किन्तु क्षत्रियाः, केवलं शस्त्रधारिणः क्रान्तिकारिणः न, ते शान्तिमार्गमपि जानीयुः । भारतीयेतिहासे प्रातःस्मरणीयाः क्षत्रियाः सर्वे शान्तिमार्गं, क्रान्तिमार्गं च सममेव अनुसृतवन्तः । साम्राज्यस्य विस्तरणार्थं, शत्रूणां दुष्टानां च निग्रहार्थं सैन्यम् अपेक्षितम् । अर्थात् क्रान्तिमार्गः अनुसरणीयः । तत्सममेव राष्ट्रे सङ्गीते, साहित्ये, वैज्ञानिके, शास्त्रे च विकासार्थं शान्तिमार्गः एव योग्यः । देशस्य शासकाः ये च प्रसिद्धाः ते सर्वेऽपि शान्तिक्रान्तिमार्गाणां समभावेन अनुसर्तारः आसन् । एवमुभयसत्त्वे एव राष्ट्रस्य विकासः सम्भवति ।

प्रधानाकरग्रन्थाः –

1. Sri Shankarabhavgavatpada's Srimad Bhagavadgita-bhasyam – Sri Dakshinamurti Matha Prakashana, Varanasi, 2015.
2. श्री मद्भगवद्गीता । श्री मच्छाङ्करभाष्येण (अष्टटीका) संवलिता, चौखम्बा संस्कृत प्रतिष्ठान, दिल्लि -१९९९
3. Subhashitaratnabhandagara – Kashinath Sharma

# श्रीभाविसमीरोक्तदिशा वेदवाङ्मयस्य सार्वकालिकता

Δ र विष्णु हत्वारः
शोधछात्रः
कर्नाटकसंस्कृतविश्वविद्यालयः बेङ्गलूरुः

विषयसारः
प्रबन्धेऽस्मिन् वेदस्य सार्वकालिकत्वं श्रीभाविसमीरगुरुराजलेखन्या कथं समुद्भूतम् इति प्रस्तूयते। सिद्धान्ते वेदशब्दं शृण्मः चेत् तत्र तत्साहचर्येण नित्यत्वम् अपौरुषेयत्वं तथा परममुख्यवृत्या भगवत्परत्वम् इति शब्दाः श्रूयन्ते। सर्वमिदं निराबाधतया सिध्यति चेत् सार्वकालिकत्वं सिध्यति। सार्वकालिकत्वं नाम सर्वकालसम्बन्धित्वं सम्बन्धश्च प्रतिपाद्यत्वादिरूपः स तु सर्वदाविद्यमानपदार्थस्य प्रतिपादनेनैव भवति।सर्वदाविद्यमानः नारायण एव।स च सर्वोत्तमश्च। तादृशोत्तमं यदि प्रतिपादयति इति सर्वजनादरणीयतया सार्वकालिकत्वं सिध्यति। रामायणवत्। अपि च प्रस्तुतं कथयेत् नाप्रस्तुतं तथा च सर्वजनयोग्यं वदेत् तदापि सिध्यति सार्वकालिकत्वम्।इत्येवं पञ्चरीत्या वेदस्य सार्वकालिकता निरूपितः।

मुख्यविषयः
जगति अस्मिन् साहित्यमेकं सार्वकालिकं भवति चेत् सः वेद एव। नाम वेदः सर्वदा वर्तते न नश्यति  इत्येव न तस्य सार्वकालिकत्वं , अपितु सार्वजीनं सार्वकालिकं किमपि बोधयति इत्येव मुख्यं कारणम्।ईदृशसर्वदाप्रस्तुतत्वरूपसार्वकालिकत्वं परम् अन्येषां न विद्यते इति निश्चयेन वक्तुं प्रभवामः।  अनेके ग्रन्थाः वर्तन्ते चेदपि वेदस्य स्थानं न यः कोऽपि अपहर्तुं शक्नोति। एवं, नित्य अपौरुषेयः कश्चनसाहित्यराशिः वर्तते चेत् वेद एव। मुख्यतया भगवद्गुणप्रतिपादकः। अतिकठिणशब्दै उपबृंहितम् इदं साहत्यमिति कृत्वा ज्ञापयिता अपेक्षते ज्ञानाय। नैके विद्वांसः वेदस्य अर्थं लिलिखु ऊचुः च । अथापि    वेदैश्च सर्वैरहमेव वेद्य इति अनेकप्रमाणप्रमितभगवत्परत्वं तथा तस्य स्वरूपतः अर्थतः च सार्वकालिकत्वं संपरिरक्ष्य नोचुः। तादृशः कश्चन ज्ञानी जगति वर्तते चेत् आचार्यमध्वः तथा तत्समः द्वैतवेदान्तवाङ्मयस्य युवराजः वादिराजमुनिः। ते तु न केवलं तदर्थमेकं ग्रन्थं व्यरचयन्। अपि तु स्वसर्वग्रन्थेष्वपि अन्यान्यवेदभागानादाय व्याचख्युः। भाविसमीरवादिराजमुनीनां हरिभक्तिलता नामकग्रन्थे कथं पूर्वोक्तविषयान् प्रस्थापितवन्त इति पश्यामः। आदौ मङ्गळं सर्वं समारचय्य तदनन्तरं कुमारश्चित् पितरं वन्दमानं मन्त्रं व्याचख्युः । मन्त्रस्तु एवं चकास्ति

कुमारश्चित् पितरं वन्दमानं प्रति नानाम रुद्रोपयन्तम्।
भूरेर्दातारं सत्पतिं गृणीषे स्तुतस्त्वं भेषजा रास्यस्मे ॥
अयं मन्त्रराजः तावत् भगवतः विष्णोः सर्वोत्तमत्वं तथा रुद्रस्य जगत्शिक्षकत्वं द्वयमपि सूचयति।तेन सार्वकालिकत्वं सिध्यति। तथा हि पदविभागः – कुमारः, चित्, पितरं, वन्दमानं, प्रति, नानाम, रुद्र, उपयन्तं, भूरेः, दातारं, सत्पतिं, गृणेषु, स्तुतः, त्वं, भेषजा, रासि, अस्मे, इति।
अर्थः- हे रुद्र- भगवतः पुत्रभूतमहेश्वर, उपयन्तं- समीपमागतं, वन्दमानं- भवन्तं नमस्कुर्वन्तं, [दैत्यमोहनार्थं नमस्कुर्वन्तं] पितरं- जनकं श्रीकृष्णं, प्रतिनानाम- पुनः भक्त्यादिसहिततया ननाम। तेन- कृष्णेन, स्तुतः त्वं- स्तोत्रीकृतः त्वं, भूरेः- अत्युत्कृष्टमोक्षस्य, दातारं- प्रदातारं, सत्पतिं- सकलसज्जनानां पतिं- स्वामिनं, गृणीषे- स्तौषि, स्तुतः-एवमस्माभिः स्तोत्रितः, अस्मे- अस्माकं, भेषजा-औषधानि, रासि-देहि।
कथा तु एवं वर्तते कृष्णः पुत्रार्थं कैलासं जगाम। रुद्रं तेपे। तदा रुद्रेणानुगृहीतः सः रुग्मिण्यां प्रद्युम्नं प्राप। तदा नमनादिकं जातम्। तदा अन्ये केचन अकथयन् परमात्मा चेत् कृष्णः तर्हि पुत्रार्थं कुतः रुद्रस्य समीपं जगाम? तथा च कृष्णः न सर्वोत्तमः इति साधयन्ति। परं अत्र गुरुराजाः साक्षात् वेदवाक्यमादृत्य वेदार्थं ज्ञापयन् सन् विष्णुसर्वोत्तमत्वं समर्थयन्ति। ते पृच्छन्ति ' कृष्णं तत्पितरं स्तुत्यं नम्यं च स्पष्टमाहहि।ईदृग् रुद्रः क्व कृष्णः क्व वदन्तु प्रतिवादिनः'॥ तपन्तं कृष्णमेव पुनः नेमे चेत् रुद्रः सः कदा कृष्णसमः भवितुमर्हति ।जगति को वा स्वशरणागतं स्वस्तुवन्तं पुनः नमति ? परन्तु लोके ज्येष्ठोऽपि पिता कदाचित् शिशुं तोषयितुं करोति हि। तथा च पितृस्थानीयः कृष्णःरुद्रं मोहार्थं ननाम। न च विनिगमने मानाभावः वाच्यम् । विषयोऽयं श्रुतेः याथार्थ्यज्ञानेनापि भवति तथाहि –
हे रुद्र पितरं कृष्णं कैलासं प्रति तर्हिचित् ।
उपयन्तम् उपायान्तं वन्दमानं च लीलया॥
उपागमनमप्यस्य लीयैव न तु वस्तुतः।
इति सूचयितुं चात्राकारं श्रुतिरगूहयत्॥ इति।
श्रुतौ उपयन्तम् इति निर्देशः वर्तते। व्याकरणरीत्या तत्र उपायान्तम् इति स्यात् खलु? तत्र तर्हि उपयन्तं इति निर्देशः दुष्टो वा इति चेन्न अस्य कृष्णस्य नमस्कारः न भक्त्यादिसहिततया, अपितु लीलया एव, नाम क्रीडार्थम् आजगाम ननाम च। तत्र नमस्कुर्यादेव इति नियमो नास्ति। अपि च दुष्टमोहनार्थम् इति च। नमस्काराङ्गभक्त्याद्यूनतां सम्पादयति श्रुतिः अक्षरविलोपनेन। न केवलमनेन पदेन कृष्णः पिता, रुद्रः पुत्रः इति ज्ञायते किन्तु कुमारश्चित् पदेनापि। चित् पदस्य एव इत्यर्थः। तथा च कुमार एव इति

सिध्यति। तदर्थमेव उवाच गुरुराजः ‘ न तूपचारतः पुत्रो वसुदेवकुमारवत्’ नाम वसुदेवकुमारः श्रीकृष्णः यथा न वसुदेवस्य औरसपुत्रः किन्तु औपचारिकपुत्रः, तद्वत् त्वं न, इति श्रुतिरेव कथयति। अपि च नानाम इति पदमपि परमात्मनः सर्वोत्कृष्टत्वं वक्ति। तथा हि तत्र ननाम इति वदेत् व्याकरणरीत्या। नानाम इत्यत्र अकार अधिकतया वर्तते तेन रुद्रः भक्त्यादिसहिततया एव नमश्चकार नतु कृष्णवत् औपचारिकनमनम्।अकाराधिक्येन अधिका भक्तिः वर्तते न सामान्यमनुष्यवत्। ननु नमनवेलायां भक्तिरावश्यकी एव तस्य कथने कापेक्षा चेत् कृष्णवत् अभक्तः सन् न ननाम भक्तः सन् एव। अन्यथा कृष्ण इव अयमपि भक्त्यादिरहितः सन्  एव ननाम इति आक्षेपः स्यात्। तथा च रुद्रादपि उत्कृष्टः परमात्मा। तादृशपरमात्मानं स्तौति इति कृत्वापि सर्वजनादरणीयं पुरुषं स्तौति चेत् अवश्यं सार्वकालिकत्वं सिध्यति। रामायणादिवत्। रामं यदि न अप्रतिपादयिष्यत् तदा सार्वकालिकोऽयं ग्रन्थरत्नः इति न स्यात् हि। अनादरणीयपरुषविषयकथनेन ग्रन्थेऽपि अनादरो हि। अपि च  व्याख्यायां तावत् निगदितं  ततः पापेन चकितः प्रति नानाम तं प्रभुम्’ इत्यनेनापि वेदस्य सार्वकालिकत्वं ज्ञायते। तथा हि वेदसाहित्यं लोकशिक्षणं करोति। यदा पिता आगच्छति तदा पुत्रः तं नमेत्। कथं पुत्रः वर्तेत, कथं पित्रा सह व्यवहरेत्? इत्यादि अनेकमौलिकविषयान् प्रणिनाय। पितृपुत्रसम्बन्धः न केवलं कृतयुगे नापि त्रेताद्वापरयोः अपि तु कलियुगे च।अपि च सर्वजनानुकरणीयः अंशः अन्यथा लोकमर्यादोच्छेदः। एवं सार्वकालिकः वेदः यदि केवलं भगवद्विषयं, यज्ञयागादिकं, तद्युगधर्मं इत्यादि किञ्चित् अवदिष्यत् तदा तत् तत्कालिकम् अथवा तत्जनानां कृते इति वा स्यात्। परं तु यदा एतादृशमौलिकं सर्वजनसम्बद्धं किञ्चित् वदति तदा सार्वकालिकत्वं सिध्यति। सार्वकालिकत्वं नाम सर्वकालसम्बन्धित्वं ननु। सम्बन्धश्च प्रतिपाद्यप्रतिपादकः भावः। इदानीम् अप्रस्तुतं यदि अकथयिष्यत् तदा प्रतिपाद्यप्रतिपादकत्वरूपसम्बन्धः इदानीमभावात् सार्वकालिकत्वं व्याहन्येत। ननु यदि अयमर्थः सिद्धः नाम रुद्रः पुत्रः सन् सम्मानितवान् इत्यादि तदा सार्वकालिकत्वं सिध्यति अन्यथा न चेन्न तदर्थमितोपि एकमुत्तरं दास्यन्ति गुरुराजाः उपयन्तम् इति।   ‘ लटः शतृशानचावप्रथमासमानाधिकरणे’ सूत्रानुरोधेन लटः शतृशानचौ प्रत्ययौ स्तः। तत्र शानच् प्रत्ययः तावत् तङानावात्मनेपदं सूत्रेण विहितात्मनेपदे भवति। तथा च वदि धातोः तावत् आत्मनेपदे शानच् प्रत्ययः भवति तदा वन्दमानं नाम आत्मार्थे वन्दनं कुर्वन्तम् इति। क्रियायाः फलं यदा कर्तृगामि भवति तदा एव आत्मनेपदप्रयोगः सम्पद्यते। इममेव विषयं  स्वरितञितः कर्त्रभिप्राये क्रियाफले सूत्रेण निजगाद पाणिनिः। तथा च भगवान् श्रीकृष्णः रुद्रान्तर्यामिणं

स्वस्मै एव नमश्चकार इति सिध्यति। अपि च तत्र रुद्रस्य नमनकथनवेलायां परस्मैपदप्रयोगः कृतः तेन ज्ञायते रुद्रः परमात्मने नमस्करोति। न स्वं प्रति । तथासति आत्मनेपदप्रयोगः स्यात्। गुहाशया एव न देहमानिने इति मम नमस्कारः न कस्य वा अन्यस्य कृते, अपि तु हृदयगुहास्थस्य परमात्मनः इति स्वमेव उवाच पार्वत्यै। तथा च कृष्णस्य नमस्कारः यथा रुद्रस्थस्वस्यैव तथा रुद्रस्यापि नमनं कृष्णस्थरुद्रस्यैव इति च्योद्यावकाशः नास्ति।एतादृशव्याख्यानं परं गुरुराजवचसा एव ज्ञायते। प्रति अक्षरस्य प्रतिपदस्य सार्थक्यं चिन्तयन्ति। अस्य मन्त्रस्य सायणभाष्यमपि वर्तते , वन्दमानम् आयुष्मान्भव सौम्य इति स्तुवन्तं पितरं कुमारश्चित् यथा कुमारः। चिदित्येतदुपमार्थे। हे रुद्र उपयन्तम् अस्मत्समीपे गच्छन्तं त्वां प्रति ननाम प्रतिनतोऽस्मि । अपि च भूरेः बहुनो धनस्य दातारं सत्पतिं सतां पालयितारम्। ‘ पत्यावैश्वर्ये ‘ इति पूर्वपदप्रकृति स्वरत्वम्। हे रुद्र एवंभूतं त्वां गृणीषे स्तौमि। मिपः ‘ तिङां तिङो भवन्ति ‘ इति से आदेशः। स्तुतः च त्वम् अस्मे अस्मभ्यं भेषजा भेषजानि रासि देहि ॥अत्र नानाम, उपयन्तं कुतः इत्यादिकं नैव चिन्तितम् ।वादिराजोक्तदिशा यदि पश्यामः तदा पौराणीकी कथापि सम्वादिनी भवति। द्वितीयं सार्कालिकत्वं तावत् वेदस्य यदा अपौरुषेयत्वं तथा भदवत्परत्वं सिध्यति तदा एव अङ्गीकर्तुं शक्यते। तथा हि वाक्यं तावत् केनचित् कृतं चेत् तदा तत्पूर्वं नास्ति इति स्वभावत एव सिध्यति हि। तदा तस्य सर्वकालवृत्तित्वं कथं वा सिध्यति? अत अन्ततो गत्वा तस्यापौरुषेयत्वम् अङ्गीकुर्यादेव। ननु अपौरुषेयः कश्चनशब्दो वर्तते वा, लोके दृष्टः सर्वोऽपि शब्दः पौरुषेय एव। तथा च अपौरुषेयमिति पदं नास्ति अतः कथं तत्समुदायभूतः वेदः? चेन्न, तत्र कर्तृप्रसिद्धिः वर्तते अत्र परं नास्ति इति चेन्न यतोऽहि कर्तृप्रसिद्ध्यसद्भावः न अपौरुषेयत्वसाधकः। कस्यचिद्वाक्यविषेशस्य वक्ता न ज्ञायते इत्यनेन तद् अपौरुषेयमिति न भवति इति चेन्न वाक्यान्तरे तु तत्काले वा कर्तृप्रसिद्धिः वर्तते। परं तु अत्र सर्वे ब्रह्मादयः पाठकाः तथा श्रोतार एव न कर्तार इति सिद्धमेव तस्य अपौरुषेयत्वम् । अतः श्रुतिरिति संज्ञा श्रुतयश्चाखिलैः श्रुतै इति। ननु वेदः नाम क्रमविशिष्टवर्णराशिः। वर्णाः नित्याः व्याप्ताः तत्र क्रमः कथं युज्यते । क्रमिकः चेत् अवश्यमुत्पन्नः भवेत्। अकारोत्तरगकारोत्तरनकारोत्तरेकार……….. इत्येवं गच्छति। अग्निमीळे……..इत्यादि सिध्यति। तथा च अकारोत्तरगकारः चेत् तदा गकरः प्राक् नासीत् इति सिध्यति खलु। तथा च उत्तरत्वघटितक्रमविशिष्टवेदः नापौरुषेय इति चेन्न ईशबुद्धिस्थितास्सदा इत्यादि बहुधाकथितत्वात् उत्तरत्वघटितं चेदपि तत् सर्वदा परमात्मनः बुद्धौ वर्तते इति कृत्वा तत्र तु क्रमविशिष्टतया एव वर्तते। तत्र वा कथं भवति

इत्युक्तौ भगवद्विषेशक्त्या भवति। ननु सर्वत्र व्याप्तवर्णानां कथं पौर्वापर्यं चेत् उच्यते बुद्धिगतपौर्वापर्येण वर्णेषु पौर्वापर्यं। औपाधिकं पौर्वापर्यं कथं घटते ? यथा घटरूपोपाधिनाजायमानघटाकाशः उपाधिनाशात् नाश्यति तद्वत् इहापि औपाधिकः नश्येत् चेन्न तत्र उपाधिः अनित्यः तज्जन्यः औपाधिकोपि अनित्यः भवति। परम् अत्र वर्णाः नित्याः तदुपाधिभूता भगवद्बुधिरपि नित्या एव। तथा कुत्रानित्यतायाः प्रसक्तिः? विषयेऽस्मिन् दृष्टान्तं कथयति यथा अज्ञानस्यानादित्वात् तदौपाधिकसंसारोऽपि अनादि इति सर्वेऽङ्गीकुर्वन्ति। परमात्मा बिम्बः नित्य इति कृत्वा जीवोपि नित्य एव इति सिध्यति। तथा च वर्णेषु पौर्वापर्यं पूर्वबुद्धिगृहीतत्वात् पूर्वत्वं पश्चाद्बुद्धिगुहीतत्वात् परत्वं वर्णे भवति। कथं पूर्वबुद्धिगृहीतत्वं परबुद्धिगृहितत्वं नित्याः किल चेत् पूर्वापराबुद्धिः विषेशतः वर्तते। तादृशपूर्वबुद्धिगृहीतत्वात् पूर्वत्वं वर्णगं भवति। अस्माकं सिद्धान्ते परं भगवतः सृष्टिसंहारेच्छे भवतः सर्वदा। अथापि तत्र परमात्मनः इच्छा या व्यक्ता भवति तदा तत्कार्यं भवति। इदानीं पालनेच्छा व्यक्ता इतिकृत्वा पालनं भवति। न तेन अन्येच्छा नास्ति इति न । तद्वत् बुद्धिरपि। नाम इदानीमेतावता बृहत्प्रबन्धेन तावत् क्रमविशिष्टतया एव वेदः सर्वदा भवति। यः सर्वदा भवति सः सार्वकालिकः। अपि च अपौरुषेयः। नाम केनापि पुरुषेण न कृतः तथा च पुरुषदोषनिबन्धनदोषः नास्ति। अदुष्टतया सर्वदा तिष्ठति इति कृत्वापि सार्वकालिकत्वं सिध्यति। यद् अदुष्टं वचः तद् सर्वग्राह्यं सार्वकालिकं भवति। रामायणवत्। पुरुषकृतरामायणे एव ईदृशीस्थितिः चेत् अपौरुषेयग्रन्थस्य किमु वदेत्। सार्वकालिकत्वं वक्तुं मुख्यं कारणं यत् भगवन्तं सर्वदा प्रतिपादयति। यदि मुख्यतया एव रुद्रं अप्रतिपादयिष्यत् तदा रुद्रः लीयते चेत् तादृश वेदभागस्य कागतिः। नाम प्रलये रुद्राभावत्। तत्काले सः मन्त्रः कं वदेत् । मन्त्रोपि नष्ट इति वक्तुं न शक्यते। यतो तर्हि पुनः सृष्टिः केन भवति इति विचिन्तयेत्। तेनैव चेत् तदा तत्केन ज्ञातं तेनैव वेदेन अन्याभावात् तर्हि अन्योन्याश्रयः।इत्यादि अनेकदोषदुष्टत्वात् वेदः सर्वदा तिष्ठति। तथा सति कं वा प्रतिपादयेदेव। रुद्रमिति वक्तुं न शक्यते। तदा अभावात्। तथा च यदि मुख्यवृत्या परमात्मानं स्तौति इति अवदिष्यत् तदा परमात्मा प्रळयेऽपि वर्तते इति कृत्वा प्रतिपादकत्वं तदापि वर्तते इति सिध्यति। तेन भगवतः कृष्णस्य वेदैश्च सर्वैरहमेव वेद्यः वचनमपि रक्षितं भवति। अपि च वेदं सम्यगधिगच्छामः चेत् ज्ञायते तत्र बहवः श्रुतयः वर्तन्ते ' सत्यं वद, धर्मं चर, स्वाध्यायान्मा प्रमदः, वाक्यानि तावत् सर्वदानुष्ठानयोग्यं सार्वकालिकं बोधयति हि। कश्चन स्वर्णस्थेय इदानीं तस्य प्रायश्चित्तं जातं परं तु तस्य खिन्नता भवति सः दुःखहृदयः सन् कथं वा जीवति। तदा वेदः वदति स्वर्णस्थेयात् वृषलीगमनमैथुनसङ्मात् इत्यादि। सः

दुःखं परित्यज्य जीवनोत्साही भवति। प्राग् ते एव वेदमन्त्राः तावत् यज्ञार्थमुपयुञ्जते स्म इदानीं तादृशकांश्चनभागानादाय अनुसन्धानादिकं कुर्वन्ति इत्यनेनापि सर्वकालप्रस्तुतत्वरूपसार्वकालिकत्वं सिध्यति। एवं भाविसमीरोक्तदिशा वेदवाङ्मयस्य सार्वकालिकता इति विषयम् आदृत्य लिखनेन अलम्

इति शम्



मोक्षसाधनम्।" एतादृशविचारान् साधयतुं कतिविधानि प्रमाणानि द्वैतमतेऽङ्गीकृतानीति तदर्थमुक्तम् 'अक्षादित्रितयं प्रमाणम्' इति प्रत्यक्ष-अनुमान-आगमाख्यानि त्रिविधप्रमाणानि प्रतिपादितानि। तत्राप्यतीन्द्रियान् विषयान् साधयितुं श्रुतिर्वा श्रुतियुक्तानुमानं वा प्रमाणम्। तदेवोक्तं बृहद्भाष्ये "निर्णयस्त्वागमेनैव नानुमाऽऽगमवर्जिता।" इति। तत्त्वेष्वन्तिमं वर्तते 'अखिलाम्नायैकवेद्यो हरिः'। उक्तप्रमाणेषु प्रबलतममस्ति आगमप्रमाणम्, तस्य प्रतिशब्दं एकमेव विषयं हरिं प्रतिपादयति मुख्यतया। हरिणारब्धतत्त्वानां हरावेव समाप्तिः इति तत्त्ववादमतस्य सरं वर्णितमस्ति।

## मध्वसिद्धान्तप्रमाणमणिमालिका

सर्वेषु दर्शनेषु विविधविचारान् तत्त्वान् प्रमेयान् च नैकविधप्रकारेषु प्रतिपादितवन्तः। तेषां सधनार्थम् अनेकानि प्रमाण्यङ्गीकृतानि वर्तन्ते। तानि च
"प्रत्यक्षमेकं चार्वाकाः काणादास्सौगताः पुनः।
अनुमानं च तञ्चाथ सांख्याः शाब्दं च ते अपि ॥
न्यायैकदेशिनोऽप्येवमुपमानं च केचन।
अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः॥

अभावषष्ठान्येतानि भाट्टवेदन्तिनस्तथा।
सम्भवंतिक्षयुक्तानि तानि पौराणिका जगुः॥“ इति प्रमाणैकादारभ्य अष्टाप्रमाणानि विविधमतैरङ्गीकृतानीति ज्ञायतेऽस्माद्वाक्यात्। तेषां तत्त्वानां प्रमाणानां वा सङ्ग्रहात्मकतया प्रथमवारं प्रायः न्यायमते श्री-अन्नम्भट्टेन ’तर्कसङ्ग्रहे’ कृतम्। एतादृशग्रन्थनिर्माणेन प्रयोजनं किमिति चेत्, विच्छिद्य वर्णितानां नैकतत्त्वानाम् एकत्राध्ययनं साध्यम्। तेन यो जिज्ञासुः तन्मतम् अवगन्तुमिच्छति प्राथमिकस्तरे स तस्याध्ययनेन स्वल्पे समये ज्ञातुं शक्यते। तत्समानाः ग्रन्थाः द्वैतवेदान्तेऽपि विद्यन्ते। तत्र श्रीपद्मनाभसूरिणा विरचितः ’पदार्थसङ्ग्रहः’, श्रीशेषचन्द्रिकाचार्येण विरचितः ’पदार्थविवेकः’ च सुप्रसिद्धौ।
तस्मिन्नेव क्रमे ’मध्वसिद्धान्तप्रमाणमणिमालिका’पि परिगण्यते। परन्तु अन्येषु सङ्ग्रहात्मकेषु ग्रन्थेषु यत्कृतं तदेवात्र मणिमालिकायां नास्ति, अन्यथा ग्रन्थवैय्यर्थ्यं स्यात्। तर्हि किं पुनर्विशेषोऽत्र? इत्यस्य उत्तरम्, आनन्दतीर्थभगवत्पादाः पञ्चत्रिंशदधिकेषु स्वकीयग्रन्थेषु नैकान् नूतनान् विशिष्टान् च विचारान् प्रतिपादितवन्तः। तान् ग्रन्थान् सर्वमूलग्रन्था इति कथयन्ति। ’सर्वमूलम् – सर्वो नाम वेदराशिः मूलमेतासां कृतीनामिति सर्वमूलता।’ ’अपिच सर्वशब्देन ब्रह्म, वेद-इतिहास-पुराण-ब्रह्मसूत्रादिशास्त्रम्, धर्मार्थकाममोक्षाख्याः चतुर्विधपुरुषार्था वा तेषामवगमने मूलं नाम मुख्यमिति सर्वमूलता।’ तत्र प्रमाणरूपेण

विविधानां श्रूतिस्मृतीनां वाक्यानि संवादितया प्रदत्तानि। तेषां सङ्ग्रहमेव ग्रन्थेऽस्मिन् (प्रमाणमणिमालिकायाम्) कृतमस्ति।
प्रमाणमणिमालिकायां सङ्ग्रहमात्रं कृतमिति नास्ति, तेषां सङ्ग्रहपूर्वकं विषयानुसारं विभक्तमप्यस्तीत्यत्र विशेषः। पदार्थसङ्ग्रहेऽपि प्रमाणवचनानि विलिखितानि, किन्त्वत्र तथोऽप्यधिकानि माध्ववचनाद् भिन्नानि भागवातादिपुराणवाक्यानि, अपिच द्वैतसम्बद्धानि मध्वविजय-सङ्ग्रहरामाण-मणिमञ्जर्यादीनि वाक्यानि ग्रन्थेऽस्मिन् संसूच्यते। तादृशसङ्कलनेन अनेकेषाम् अध्यापकानाम्, जिज्ञासूनाम्, शोधार्थिनाञ्च महदुपकारकमस्तीत्यत्र नास्ति संशयः। यतः, द्वैतवेदान्तसम्बद्धाध्ययने शोधकार्ये जिज्ञासायां वा कमपि विषयमधिकृत्य मध्वाचार्यैः कस्मिन् ग्रन्थे किं प्रमाणं दत्तमिति यथाशीघ्रं प्राप्यते। विशेषध्ययनपक्षे तदनुरेव निर्दिष्टे ग्रन्थे कथं वा समर्थितमिति विशेषविचारान् परिद्रष्टुं शक्यते। अधुनिकश्ब्देन इमं ग्रन्थं ’द्वैतप्रमाणवचनानां Encyclopedia अथवा A book of references’ इति वक्तुं शक्यते। इतोऽपि वक्तव्यं चेत्, मया मध्वसिद्धान्तविषये प्रदर्शितानि अनेकप्रमाणानि मध्वसिद्धान्तप्रमाणमणिमालिकया एवोद्धृतानि। अस्य ग्रन्थस्य कर्तुः परिचयस्तावद् अधिकं न प्राप्यते। अस्मिन्नेव ग्रन्थस्यान्ते “श्रीनिवासार्यपुत्रेण वेङ्कटरमणसुशर्मणा’ इति लिखितमस्ति। तेन तस्य पितुः नाम श्रीनिवास इति ज्ञायते। ग्रन्थकर्तुतस्य

ग्रन्थान्तरस्य अनुपलब्धित्वाद् अधिकं न लभ्यते। अस्य कालविचारे जिज्ञासा वर्तते। ग्रन्थान्ते कर्त्रा लिखितमस्ति – "युव नाम वर्ष आश्वीयुज मास तृतीया गुरुवासर सम्पूर्णम्" इति। कस्मिन् शकाब्दे युववत्सरे गुरुवासरयुक्ता आश्विनतृतीया समभूदिति शोधावहः क्लिष्टः कालविचारः। पञ्चाङ्गसमीक्षायां ग्रन्थस्वरूप एव कालं विचारयति। अयं ग्रन्थः सुप्रसिद्धयोः द्वैतवेदान्तसम्बद्धयोः पदार्थसङ्ग्रहपदार्थविवेकयोः शैलीमनुसरतीव भाति। तौ च वेदगर्भपद्मनाभसूरिविरचितः पदार्थसङ्ग्रहः श्रीशेषचन्द्रिकाचार्यविरचितः पदार्थविवेकश्च न्यायनयस्य प्रमेयप्रमाणादिपदार्थानां सङ्ग्रहात्मकं अन्नम्भट्टकृतं तर्कसङ्ग्रहमनुसरति। तस्मात् तन्मध्यायितं भवति ग्रन्थस्यास्य कालम्।

तर्कसङ्ग्रकार अन्नम्भट्टस्तु १७तमस्य शतकस्य पूर्वार्धे आसीदिति प्रसिद्धम्। अपिच अस्य वेङ्कटरमणसुशर्मणः ग्रन्थस्य प्रतिलेखनं सुब्रह्मण्यशास्त्रिना ३.११.१९७३ तमे वर्षे कृतम्। तेन ज्ञातुं शक्यते यदेतयोरन्तर एव कालः स्यादिति। अस्मिन्नन्तरे ग्रन्थलिखितदिनं तु शुक्लपक्षः कृष्णपक्षो वेति अलिखितत्वात् प्रकारद्वयं भवितुमर्हति ग्रन्थस्य सम्पूर्तेर्दिनम् – 23/10/1755 तथा 05/10/1815। यतः पूर्वोक्तयुवाश्विनतृतीया गुरुवासर अत्रैव भवतीति दृक्पञ्चाङ्गः। अत्रापि १९तमे शतके बहुशः स्यादिति प्रकारान्तरेण ज्ञायते। यतः, पदार्थसङ्ग्रहस्य कर्ता वेदगर्भ-पद्मनाभसूरिस्तु उत्तरादिमठस्य

सत्यसन्धतीर्थस्य समानकालीनः स्यादिति तद्ग्रन्थस्य भूमिकायां लिखितमस्ति। सत्यसन्धतीर्थस्तु १८तमशतकस्य द्वितीयार्धेऽतिष्ठदिति उल्लिखितत्वात्, प्रमाणमणिमालिकायाः समयः १७५५ तमः वर्षः न भवितुमर्हति। तेन ५.१०.१८१५ तमे दिनाङ्के समाप्तमुचितं भवतीति।

## उपसंहारः

ग्रन्थेस्मिन् त्रिंशत्यधिकानि प्रकरणानि च विद्यन्ते। तत्र प्रतिप्रकरणम् विविधग्रन्थेषु आचार्यभगत्पादैः तत्रतत्र प्रतिपादितानि प्रमाणवचनानि वर्तन्ते। तेन साक्षात् श्रीमदानन्दतीर्थभगवत्पादानाम् ग्रन्थेषु विद्यमानमभिप्रायं सरलतया अवाप्तुमर्हति। एतादृशानां सङ्कलनात्मकानाम् अध्ययनानां प्रामुख्यं स्पष्टं ज्ञायते। न केवलं द्वैतवेदान्ते, अपितु अन्यवेदान्तादिशास्त्रेषु सङ्कलनेन युवविद्वत्समाजस्य अन्येषां जिज्ञासूनां च आनुकूल्यं भवेत्।

## उदाहृतग्रन्थसूची

(n.d.). Retrieved from Anandamakaranda: https://anandamakaranda.in/

(Madhvacharya), A. (2009). *Śrī-mahā-bhārata-tātparya-nirṇaya.* (G. Bannaje, Ed.) Udupi: Tatva-Samśodhana-Samsat.
Madhvacharya. (2005). *UPANIṢADBHĀṢYAM.* Bengaluru: Poornaprajna Samshodhana Mandiram.
Madhvacharya. (2006). बृहदारण्यकोपनिषद्भाष्यम्. Bengaluru: Poornaprajna Samshodhana Mandiram.
Padmanabhasuri. (2009). *Madhvasiddhantasara with Padarthasangraha.* Bengaluru: Dvaita Vedanta Studies and Research Foundation.
Puranika, H. K., Bhatta, H. A., & Pandurangi, K. T. (Eds.). (2008). *Gitaprasthana (Sarvamulagranthagalu).* Bengaluru: Akhila Bharata Madhva Maha Mandala.
R, G. (2021). kurubhuṅkṣva: tatvavāda-bhagavadgītayoḥ karmajijnāsā. *Journal of Veda Saṁskṛta Academy*, 39-48.
*Srimad Bhagavadgita: Gita Supersite*. (1996). (Department of Computer Science and Engineering, Indian Institute of Technology, Kanpur) Retrieved from Gita Supersite: https://www.gitasupersite.iitk.ac.in/srimad?language=dv&field_chapter_value=1&field_nsutra_value=1&scsh=1&scram=1&scanand=1&scjaya=1&scmad=1&scval=1&scms=1&scsri=1&scvv=1

Upadhyaya, P. (2018). *Sarvamulasaurabha.* Udupi: Tatva Samshodhana Samsat.

हरिवंशपुराणम्. (n.d.). Retrieved from विकिस्रोतः: https://sa.wikisource.org/



# मुरारेस्तृतीयः पन्थाः

∆डा. कोगण्टि. रामानुजाचार्यः
व्याकरणाचार्यः

संस्कृतदृश्यकाव्येषु अन्यतमं, शास्त्रवासनावासितं, विलक्षणञ्च भवति मुरारिकविना विरचितम् अनर्घराघवनाटकम्। रामायणादितिवृत्तमादृत्य, गौडीयां रीतिं समादृत्य, प्रौढरचनया समलङ्कृतं वीररसप्रधानमनर्घराघवं नाम नाटकं विरचय्य प्रतिभाव्युत्पत्त्यभ्यासैः प्रतिभासमानोऽयं कविः स्वीयनाटके अनर्घराघवे सरस्वतीम् –

धातुश्चतुर्मुखी कण्ठशृङ्गाटकविहारिणीम् ।
नित्यप्रगल्भवाचालामुपतिष्ठे सरस्वतीम् ।।१

इति मृदुमधुरगभीरया वाचा तुष्टाव । अत्र स्तुतावपि प्रगल्भवाचालां सरस्वतीम् उपतिष्ठे इत्येवं वाचालशब्दप्रयोगेण (वाचां लाति – आदत्ते इति वाचाला) स्वीयशब्दप्रयोगवैलक्षण्यं प्रादर्शत्। तथैव वाल्मीकिमपि–

तमृषिं मनुष्यलोकप्रवेशविश्रामशाखिनं वाचां
सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ।।२

इत्यनितरसाधारणकविकल्पनालङ्कारेण पर्यभूषयत् । संस्कृतसाहित्यप्रपञ्चे कश्चित् सुप्रसिद्धाभाणको मुरारेस्तृतीयः पन्थाः इति। सर्वं लक्षणलक्षितं भासभवभूतिकालिदासनाटकीयपथमुत्सृज्य कविरयं स्वीयनाटकरचायां स्वतन्त्रपथमेवानुससार । शास्त्रवासनावासिते नाटकेऽस्मिन् प्रतिपादितं प्रतिपदं प्रतिभाव्युत्पत्ति सम्पन्नां कवेरस्य

रचनासरणिमभिव्यनक्ति। व्यङ्ग्यप्रधानरचनानिपुणः कालिदासः, वाच्यप्रधानः भवभूतिः, किन्तु कल्पनाप्रधानोऽयं मुरारिरिति अस्य तृतीयः पन्थाः सम्यगवगम्यते । प्रौढपरीपाकरचनासंविधानात् नाटकस्यास्य विद्वज्जनपरितोषिकारिता नितरां बोभवीति । अनर्घराघवमपहाय मुरारिकर्तृकत्वेन काव्यानामथवा नाटकानां चान्येषां प्रचारो न वर्तते । किन्तु संस्कृतसाहित्यजगति मुरारेः विलक्षणं समुन्नतं पदं वरीवर्ति । अतः मुरारेः तृतीयः पन्थाः इति विद्वदुक्तिः केवलमनर्घराघवनाटकेनेति विभाव्यते । नाटकेऽस्मिन् अङ्काः सप्तैव । भासभवभूतिजयदेवादीनां रामायणकथाधारनाटकेष्वपि सप्तैवाङ्काः। पण्डितसदसि, गीर्वाणवाणीकवितायां मुरारिश्रीहर्षयोरेव महोन्नतस्य स्थानस्य महीयमानत्वात् पण्डितप्रकाण्डानां या शास्त्रवासना, या शाब्दिकप्रियता, या अनुपमेयकल्पनाचातुरी च बोभवीति तेषां सर्वेषां गुणाना-माकर इव मुरारिनाटकस्यैव परिलक्ष्यमानत्वाच्च नाटकस्याऽस्य वैशिष्ट्यं सुष्ठु विस्पष्टं भवति। केचन, मीमांसाशास्त्रप्रवर्तकयोः भाट्टप्राभाकरयोः मते निराकृत्य तृतीयमतस्य स्थापनात् मुरारेस्तृतीयः पन्थाः इति विद्वदुक्तिं विभावयन्ति। तर्हि मीमांसाशास्त्रग्रन्थजातमपि कविना विरचितं भवेदिति सम्भाव्यते । अथवा अयं मुरारिः अन्यः मीमांसाकारात् भिन्नः इति वक्तव्यम्। एवमेव काव्यप्रकाशव्याख्यातुः भीमसेनदीक्षितस्य सुधासागरे मुरारिमिश्रनामकस्य

अन्यस्य व्याख्यातुः निर्देशः बहुत्र लक्ष्यत इति हेतोः मुरारिमलङ्कारग्रन्थप्रणेतारमिव केचित् वदन्ति । किन्तु नाटककर्तुः मुरारेरपेक्षया, मीमांसालङ्कारादिशास्त्रप्रसिद्धः मुरारिमिश्रः अपर एवेति सूक्ष्मक्षिकया नाटकस्य परिशीलनेन अवगम्यते । अनर्घराघवनाटकसमीक्षणेनाप्यस्य तृतीयापद्धतिः विशदीभवति । व्यङ्ग्यवाच्यभिन्ना काल्पनिकी शैली मुरारिणाऽऽदृता। मुरारेः प्राक्तनाः आलङ्कारिकाः सर्वेऽपि वैदर्भीं गौडीयामेव च रीतिं३ समाद्रियन्ते। अनेन तु पाञ्चाली चेति तृतीयायाः रीतेरप्याश्रयणेनाऽस्य तृतीयः पन्थाः सुस्पष्टं भवतीति केचन वदन्ति ।
साधारणतया साहितीलोके प्रयुज्यमाना शैली द्विप्रकारा परिगण्यते सम्भाषणप्रचुरा, वर्णनप्रचुरा चेति । तत्र सम्भाषणप्रचुरा रचना नाटकेषु, वर्णनप्रचुरा रचना श्रव्यकाव्येषु चाऽद्रियते। सम्भाषणप्रचुरायाः रचनायाः मनोहरमुदाहरणं मृच्छकटिकम् इति विमर्शकाणामभिप्रायः। वर्णना प्रचुरा रचना गद्यप्रबन्धेषु प्रसिद्धैव, यथा कादम्बरीकाव्यम्। एवं द्विप्रकारकरचनायाः भेदे जागरूकेऽपि केचन श्रव्यकाव्ये सम्भाषणप्रचुरायाः नाटकीयरचनायाः प्रयोगं, केचन नाटकेष्वपि वर्णनाप्रचुरायाः प्रबन्धशैल्याः समादरणञ्च कुर्वन्ति । एवं स्थिते कविरयं मुरारिरुभयोरपि रचनयोः रुचिरतरं सम्मिश्रणं चकारेत्यनर्घराघवनाटकं विमृशतां मुरारेस्तृतीयः पन्थाः दृग्गोचरो भवति ।

एवं नाटकरचनानिर्माणव्यवसितेन मुरारिणा रचनाविषये तृतीयविलक्षणसरणेः आश्रयणात् मुरारेस्तृतीयः पन्थाः इत्यार्योक्तिः । काव्यादिषु कवीनां मनोव्यापारः वर्णनाविषये पाठकानां प्रत्यक्षीभवति । नाटकादिषु कविः स्वपरिकल्पितपात्रान्तरितो भूत्वा पाठकानां दृग्गोचरो भवति। अत एव नाटकादिषु प्रयुज्यमानायाः रचनायाः भिन्नशैली काव्यादिषु प्रयुज्यते । किन्तु कविरयं मुरारिः नाटकीयभाषां श्रव्यभाषाञ्च युगपत् प्रयुज्य सम्भाषणावसरे वर्णनावसरे चात्मानं प्रकटय्य नाटकजगति स्वीयं तृतीय . पन्थानं प्राकटयत्।

प्रातःकालिकशोभां वर्णयन् कविरयं–

लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चुम्बति ४

इति प्रातःकाले निर्गतकान्तिरयं चन्द्रमाः लूतातन्तुवितानवत् प्रतीयमानोऽम्बरतलात् : निर्गत्य चोरहृतवस्त्रादिः पुरुषः दिवा शैलादौ यथा निलीयते, तथा प्रोषितकिरणत्वादस्ताद्रिमाश्रयते इत्येवंपूर्वकल्पनाचातुरीप्रयोगेण स्वीयं तृतीयं पन्थानमावेदयामास ।

अपि च तृतीयः पन्थाः इत्यस्यापमार्गः इति प्रतीतिः। कवेरस्य केचन वर्णनाविशेषाः श्रोत्रियाणां मनःखेदमुत्पादयन्ति । शुनश्शेफो नाम कश्चन मन्त्रद्रष्टा मुनीश्वरः । तन्नाम स्वीकृत्य, शुनश्शेफपशुमेद्रनामानौ विश्वामित्रशिष्यौ परस्परालापं ५ कुर्वन्तौ पाठकानां चित्तखेदमेव जनयतः । अतः शुनश्शेफपशुमेद्रनामपरिकल्पनेन मुरारेः

तृतीयपथानुसरणं विज्ञातं भवति । ब्रह्मसृष्टेः प्रतिसृष्टिकर्ता, मन्त्रद्रष्टा, विश्वामित्रो नाम सुप्रसिद्धो महामुनिः, चराचरजगत्साक्षिभूतं तेजःपुञ्जं, प्रचण्डकिरणं तं मुनिं – ‘ अयमपि खैरयोषित्कर्णकाषायमीषद्विसृमरतिमिरोर्णाजर्जरोपात्तमर्चिः’ ।।६ इति गर्दभीकर्णवर्णसदृशं वर्णयामास । अनया दृशा निन्दापूर्वकल्पनाचातुरीमभिलक्ष्यैव विद्वांसो मुरारेस्तृतीयः पन्थाः इति व्यवहरन्ति ।

तृतीयः पन्थाः इत्यस्यार्थः विशेषमार्गः, अपमार्गः इति वाऽस्तु । अनेककाव्यनाटकनिर्मातृभिः भासभवभूतिकालिदासादिभिस्साकं समानस्कन्धतामेकेन नाटकेनैव कविरयमलभत इत्युक्तौ पूर्वोक्ताभाणकस्य वस्तुस्थितिरवगम्यते ।

*****

१. अ.रा.१.११ २. अ.रा.१.१० ३.सा.द. ९ परि ४.अ.रा.२.२ ५.अ.रा. द्वितीयाङ्के ६.अ. रा २.४५

सङ्केताक्षरपदसूची– अ.रा = अनर्घराघवम्, सा.द= साहित्यदर्पणम्

परिशीलितग्रन्थसूची–


1. अनर्घराघवम्– मुरारि विरचितम्– ‘प्रकाश’ व्याख्योपेतं–व्याख्याता आचार्य रामचन्द्रमिश्रः– चौखम्बा विद्या भवन्, वाराणसी.
2. अनर्घराघवम्– मुरारि विरचितम्– चूडामणि आन्ध्रव्याख्यानं– श्री बेतवोलु रामब्रह्मम्– तेलुगु विश्वविद्यालयम्, हैदराबाद्.

1.3. साहित्यदर्पणम्– विश्वनाथकविराजविरचितम्– व्याख्याकारःशेषराज शर्मा रेग्मी– चौखम्बा कृष्णदास अकाडमी, वाराणसी.
1.4. प्रतापरुद्रीयम्– विद्यानाथकृतम्– चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली.
1.5. वैयाकरणसिध्दान्तकौमुदी– भट्ट्टोजीदीक्षितकृता– चौखम्बा संस्कृत प्रतिष्ठान्, दिल्ली.
1.मृच्छकटिकम्- शूद्रककविविरचितम्– भावप्रकाशिका व्याख्या प्रो. जयशङ्करलाल त्रिपाठी- कृष्णदास अकाडमी, वाराणसी.
1.7. कादम्बरी– बाणबट्टविरचितम्– चन्द्रकला, विद्योतिनी व्यख्याद्वयोपेता- पण्डित कृष्णमोहन शास्त्री., चौखम्बा कृष्णदास अकाडमी, वाराणसी.

